भारतभूषणपरिचयः

धन्याऽस्ति कविप्रततनपरम्परा। यस्याः प्रवाहोऽविच्छिन्नरूपेण प्रसरति। अस्यामेव परम्परायामात्मानं स्थापयति काशीपरम्परापरिपालनविहितकाव्यरचनातपश्चर्यो डॉ. राजकुमारमिश्रः। डॉ. मिश्रोऽत्र भारतभूषणाख्ये स्वीये काव्यरत्ने भारतभूषणरूपाणि विविधानि भूषणानि श्लोकयति येषु - भारतप्रशंसा, संस्कृतमहत्त्वं च प्रामुख्येन वर्तेते। अत्र शताधिकपद्यानि राजन्ते। येषु निजराष्ट्राय जनानां किं कर्तव्यम्, संस्कृतं किमर्थम् अध्येतव्यम्, राष्ट्रसुरक्षाविचारः, राजनीतिदुर्व्यवस्था चेति विषयाः प्राधान्येन वर्णिता वर्तन्ते। काव्येऽस्मिन् पदानां भावानुगुणः प्रयोगः कृतः कविना राजकुमारेण। यस्मात् कवेरस्य साहित्यपदपदार्थरहस्यावबोधनपाटवम् अभिव्यनक्ति। अत्र विविधानामलङ्काराणां समावेशः काकुविधायाः परिपालनं च महीयेते। कवे राष्ट्रविषयिणी उदात्तभावना च प्रतिपद्यं विभाति। काव्यमिदं विद्वन्मण्डले महिष्ठां प्रतिष्ठां कुर्वद् आगामिकाव्यकृते भूयिष्ठां प्रेरणां प्रदद्यादिति कामये—

प्रो. प्रभुनाथद्विवेदी

सादरं समर्पितं काव्यपुष्पकमिदं
गुरुवर्याणां चरणकमलेषु ।

25-09-17

राजकुमारमिश्रः

# भारतभूषणम्

(हिन्दीभाषानुवादसमन्वितं सुरभारतीगौरवोद्बोधकं काव्यम्)

प्रणेता
राजकुमारमिश्रः




श्रीकृष्ण साहित्य सदन
दिल्ली-84

आइ.एस्.बी.एन्. : 978-93-82825-01-2



प्रथम-संस्करणम् : 2012

प्रकाशकः
श्रीकृष्ण साहित्य सदन
490/18, चन्दन विहार, वेस्ट संतनगर, बुराड़ी, दिल्ली-110084
फोन : 09899671737
e-mail : shrikrishnapublication@yahoo.in

मूल्यम् : 295.00

टाईप सेटिंग : एस० के० ग्राफिक्स, दिल्ली-84

मुद्रक : एस० के० ऑफसेट

# समर्पणम्

परमादरणीयानां विविधशास्त्रमर्मज्ञानां विविधग्रन्थरत्न-प्रणेतॄणां व्याकरणसाहित्यवेदान्तादिपण्डितानां ज्ञानवृद्धानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसाहित्यविभागाध्यक्ष-चराणामुदारचरितानां दौर्भाग्याद् असमये दिवं गतानां श्रीमताम् आचार्य 'रमाशङ्करमिश्र' गुरूणां पादारविन्देषु श्रद्धाञ्जलिरूपेण समर्प्यते पद्यपुष्पात्मिका आदिमाभिनवेयं कृतिः —

यदुद्वहज्ज्ञानसुधां निपीयाऽभवं पयोजाश्रितभृङ्गतुल्यः।
तच्छ्रीरमाशङ्करमिश्रपादाम्बुजेऽर्प्यते काव्यमिदं नवीनम्।।१।।

शास्त्रार्थे सुरुचिः शुचिश्च वदने कार्ये च काये तथा
विद्वत्सेवितविग्रहोऽतिसरलो यो ज्ञानपूर्णप्रभः।
आसीत् तात इवातिचिन्तनपरो मद्भाग्यपुष्पे गुरुः
तं विद्वच्चयमण्डितं दिवि गतं ध्याये रमाशङ्करम्।।२।।

काव्यं येन शताधिकं विरचितं लोके बुधोल्लासदं
येनाकारि सदाऽऽदरोऽथ विदुषां ज्ञानाग्रगण्येन च।
प्राप्ता येन विलक्षणप्रतिभया विद्वत्प्रतिष्ठाऽमला
तस्मै सद्गुरवेऽर्पयामि रचनां स्वीयामिमां श्रद्धया।।३।।

राजकुमारमिश्रः

# विषयानुक्रमः


| | |
|---|---|
| समर्पणम् | ३ |
| विजयतां संस्कृतम् | ५ |
| नान्दीवाक् | ६ |
| शुभकामना: | ८ |
| शुभाशंसनम् | १० |
| भारतभूषणमधिकृत्य किञ्चित् | ११ |
| किञ्चिद् वाचिकम् | १३ |
| आत्मवाचिकम् | १६ |
| कृतज्ञताऽऽलोक: | २० |
| भारतभूषणम्, मङ्गलाचरणम् | २३ |
| कविविनय: | २४ |
| परिशिष्टम् | ७६ |
| भारतभूषणकाव्यसमीक्षा | ७९ |
| 'भारतभूषणम्' समीक्षा | ८३ |

# विजयतां संस्कृतम्

संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः।

महाकविर्दण्डी

भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा

कस्याप्यधुनातनस्य

ऋषिणामाद्यानां गहनमननावाप्तसुयशाः
श्रुतीनां शास्त्राणां निखिलगुणतत्त्वार्थनिलया।
पुरातत्त्वाधारा सकलभवज्ञानाब्धिविभवा
जयेद् दैवी वाणी त्रिभुवनमनोज्ञा बुधप्रिया।।

कपिलः

सुवर्णा सद्वृत्ता विविधललितालङ्कृतिचणा
गुणाढ्या निर्दोषा विबुधनिवहाराधितपदा।
सुरीतिप्रख्याता भवविभवरूपाश्रितरसा
सदेयं शर्वाणी जयतु सुरवाणीह सततम्।।

कस्याप्यज्ञातस्य

यत्सम्भवे परिणये मरणे च तुल्यं
संस्कारकर्मणि सदा निखिलेऽपि राष्ट्रे।
प्रोच्चार्यते सविनयं ननु संस्कृतं तद्
देवार्चितं दिशतु मे नवसुप्रभातम्।।

अभिराजराजेन्द्रः

(प्रभातमङ्गलशतकम्)

# नान्दीवाक्

अर्वाचीनसंस्कृतरचनाधर्मितायां यद्यपि सन्त्येकाधिकाः स्वरास्तथापि तेषामन्यतमो राष्ट्रभक्तिस्वरो महीयते। जनन्या अनन्तरं जन्मभूमिरेव प्राणप्रियतायाः काष्ठामधिरोहति। किञ्च, आत्मनोऽनन्तरमपि राष्ट्रमेव महार्घतमं परिलक्ष्यते, तत् एव वेदयुगेऽपि महर्षयोऽस्माकं 'माता भूमिः पुत्रो अहं पृथिव्या' इति वाचमुद्गिरन्तो मातृभूमिमाहात्म्यं विशदयाञ्चक्रुः। लङ्काविजयानन्तरं मर्यादापुरुषोत्तमो रामोऽपि, स्वर्णमय्यां लङ्कायां स्वानभिरुचिं प्रकाशयन् मातृभूमिमयोध्यामेव भूयस्त्वेन स्मृतिपथमानयति।

एवं हि चिरत्नकालादेव संस्कृतकवीनां कश्चित् प्रगाढतमो मोहः परिलक्ष्यते स्वजनपदं प्रति, स्वाग्रहारं प्रति। वस्तुतस्तु अयं प्रगाढमोह एव राष्ट्रप्रणयन्यग्रोधस्य बीजकल्पः। कविकुलगुरुः कालिदासोऽपि क्वचिद्रघुदिग्विजयव्याजेन, क्वचिदिन्दुमतीस्वयंवरमाध्यमेन, क्वचित्पुनर्मेघयात्राव्याजेन च भारतराष्ट्रं प्रति निजां बलवतीं दुर्वाराञ्चासक्तिं प्रकटयत्येव।

किञ्च, स्वाधीनतासंग्रामावधौ तु राष्ट्रमेवाऽसीदेकमात्रं काव्येतिवृत्तम्। तदानीन्तनाः कवयोऽप्पाशास्त्रिराशिवडेकराऽरविन्दघोषरामावतारशास्त्रिप्रभृतयो मुक्तकप्रबन्धोभयरीत्या विपन्नभारतमेव स्वकाव्यविषयं कृतवन्तः। श्रीमदरविन्दघोषप्रणीता भवानीभारती तु रचनासमकालमेव गौराङ्गशासनेन निगृहीता।

सैव राष्ट्रभक्तिकाव्यधाराऽद्यापि लोकप्रियतां भजते। पश्याम्यहं यत्प्रायेण सर्वेऽपि नव्याः कवय इदम्प्रथमतया स्वदेशमेवाऽभिलक्ष्य कवयितुं समीहन्ते। तत्तु स्वाभाविकमेव प्रतीयते। यतो हि कवित्वे समुन्मिषिते सति, प्रथमचरण एव गूढाऽतिगूढान्तर्दृष्टिः प्रबुद्धा न भवति। यथा सहकारफलं क्रमेणैव परिपाकं लभते तथैव कवित्वमपि शनैः शनैरेव प्रौढिं रसवत्तां शब्दार्थप्रत्यभिज्ञाञ्चावगाहते। अतएवादौ वर्णनीया एव विषया रोचन्ते। वर्ण्यविषयेष्वपि राष्ट्रमेव प्रामुख्यमुपैति।

अस्मत्परिष्कृतमनीषाविभवेन शिष्यरत्नेनाऽयुष्मता डॉ० राजकुमारमिश्रेणाऽपि भगवत्या मल्लिकाक्षवाहिन्या अनुग्रहमवाप्य '**भारतभूषणं**' नामातिललितं काव्यं प्रणीतं यदनुशील्य साङ्गोपाङ्गं प्रभूतप्रीतिमहमनुभवामि। हृद्याऽनवद्या वर्णनशैली, निर्दोषा भाषाऽलङ्काररम्या च पदशय्या अस्याभिनवकवेः बलादाकर्षन्ति सहृदयहृदयम्। अत्र रसिका एव प्रमाणम्। तदहं भूयोभूयो जयजीवशब्दैः सभाजये श्रीमिश्रमहोदयम्। सप्रणयम् —

मिश्रोऽभिराजराजेन्द्रः

**शिमला** **प्रो० 'अभिराज' राजेन्द्रमिश्रः**

**कुलपतिचरः**

सम्पूर्णानन्दसंस्कृत-

विश्वविद्यालयः, वाराणसी

# शुभकामना:

अनादिकालतः काव्यगङ्गाऽविरलं प्रवहति। अनन्तकविपरम्परावाहिनि संसारे केचन कालिदासादयो द्वित्राः पञ्चषा वा महाकवयः कालजयिनो भूत्वा भाविनीं कविपरम्परां कविकर्मणे प्रेरयन्ति। वाग्देवतालब्धप्रसादाद् जनाः स्वकाव्यकुसुमैः तामेव भगवतीं वाचं वन्दन्ते आत्मसुखं चानुभवन्ति। सुरभारत्यां ये कवयः कवयन्ति तेषां प्रधानमुद्देश्यं भवति गीर्वाग्गिरः समभ्यर्चना। काव्यशास्त्रेषु बहुधा गीतम् अर्थलाभादिकमुद्देश्यम् अद्यत्वे संस्कृतकवीनां कृते दुरारूढकल्पनेव आभाति। वस्तुतः संस्कृतवाचः परिसेवा तेषां प्रधानं साध्यं भवति। अनेनैव हेतुना इदानीं यावत् संस्कृतस्य रचना धारा अजस्त्रं प्रवहमाणा अवलोक्यते। डॉ० राज़कुमारमिश्रेण स्वदेशस्य संस्कृतस्य च माहात्म्यं स्त्रिग्विणीवृत्तेन सरलया सरसया च रीत्या उपश्लोकितम्। 'भारतभूषणम्' इत्येतच्छीर्षकस्य अन्वर्थता प्रतिपदं रचनया प्रकटीक्रियते। भारतस्य यानि भूषणानि सन्ति तेषु संस्कृतभाषाऽपि परिगण्यते। कविवरेण मिश्रमहाभागेन भारतस्य विविधानि दर्शनीयानि वस्तुनि, नगराणि, भवनानि अन्ये च ते ते विशेषाः सम्यक् अवर्ण्यन्त। अयं महानुभावः स्पष्टं स्वनिर्भान्तं मतं प्रस्तौति यद् विना संस्कतज्ञानं कोऽपि भारतीयः प्रत्यभिज्ञात एव न भवति—

**वृक्षपुञ्जे स्थिते भो ! यथा चन्दनं**
**पर्वतव्यूहमध्येऽथवा नागराट्।**
**विद्यमानेऽपि भाषान्तरे बान्धवाः!**
**संस्कृतस्याश्रयाद् भारतं भा-रतम्।।**

देशस्य गौरवं संस्कृतस्य संस्कृतेश्च माहात्म्यं समुद्घोषयद् 'भारतभूषणं' नाम काव्यम् एकतः स्वदेशस्य भक्तिभावं पुष्णाति अपरतश्च स्रग्विणीकाव्यपरम्परां विस्तारयद् अस्या लोकप्रियत्वं मण्डयति।

डॉ० मिश्रवरो भुवि विद्यमानं संस्कृतसूर्यम् अम्बरगतभास्करादपि विशिष्टत्वेन रूपेणोत्प्रेक्षते व्यतिरेकालङ्कारद्वारेण—

हृत्तलोल्लासिनी सूर्यनित्यस्थिति-
व्योम्नि सन्दृश्यते येति सिद्धं वचः।
याति किन्तूदयं नूतनं यत् क्षितौ
निस्तपं शीतलं संस्कृतं सेव्यताम्।।

डॉ० मिश्रमहाभागाः संस्कृतकाव्यप्रणयनार्थं मया भूयोभूयोऽभिवन्द्यन्ते। एतेषां काव्यं पाठकेभ्यः प्रेरणाप्रदं स्यादिति परमेश्वरं प्रार्थये।

रमाकान्तशुक्लः
(शास्त्रचूडामणिः)
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

# शुभाशंसनम्

जयति जयति काशी शाङ्करी शङ्करी सा
वसति शिवसनाथा पार्वती यत्र नित्यम्।
जयति धवलधारा पुण्यदा लोकमाता
कलिमलचयहन्त्री जह्नुपुत्री च गङ्गा।।
जयति सकलशास्त्राध्यापनख्यातकीर्तिः
कविवरकुलपूज्यः श्रीरमाशङ्कराख्यः।
नवनवरचनाभिः शिष्यवृन्दैश्च लोके
विचरति यशसा यः पण्डितेन्द्रो महात्मा।।
सेवां तस्य विधाय काव्यममलं श्रीभारतं भूषणं
नव्यं राजकुमारमिश्रकविना यन्निर्मितं श्रद्धया।
भूयाद् भारतभूतये सुरगिरः शश्वत्प्रकाशाय तत्
कल्याणाय च कीर्तये युवकवेर्विद्वत्प्रमोदाय च।।

डॉ० रमाकान्तपाण्डेयः
निदेशकः
राष्ट्रियसंस्कृतसंस्थानान्तर्गतमुक्तस्वाध्यायपीठस्य

# भारतभूषणमधिकृत्य किञ्चित्

अस्मिन् संस्कृतवाङ्मयेऽभवन् नैके वाग्देवीचरण-कमलसेवाव्याजपरागलोलुपकोविदमिलिन्दाः, ये च तन्मकरन्दगन्धप्रसारेण भारतीयधरां सुवर्णपुष्पां कृतवन्तः। इयं हि संस्कृतवाङ्मयपरम्पराजाह्नवी स्वोद्गमनाद् निरन्तरं प्रवहमाणा नेत्रतलम् अनुरञ्जयन्ती सर्वान् सन्तारयन्ती असत्पथगामिनः सन्मार्गं नयन्ती अद्यापि **'पुराणी युवतिः'** इति प्रथिताभिधानम् अन्वर्थतां साधु साधयन्ती दृग्गोचरीभवति। अस्यामेव परम्परायामस्ति काशीपरम्परादीक्षो राजकुमारमिश्रनामा अतीव सम्भावनाशीलः तरुणः सुकविः, यश्च मत्प्रीतिभाजनम्। अयं भारतभूषणाभिधेऽभिनवे काव्ये न केवलं सुरभारत्याः महिमानमेव कीर्तयति प्रत्युत भारतगौरवमपि भूयस्त्वेन स्थापयति विविधैः पद्यपुष्पैः। क्वचिद् भारतगौरवबाधकान् तर्जयति, क्वचित् तान् सन्मार्गगमनाय प्रबोधयति, क्वचित् सुरधुनीपावनत्वं सूचयति, क्वचिच्च तन्महत्त्वबाधकान् स्वच्छीकरणाय निवेदयति। किञ्च पर्यावरणम्, कश्च आतङ्कवादविषयः, को वा शान्तिसन्देशः मन्ये समस्ता अपि काव्यविषयीकृताः विषयाः सुष्ठु विनिबद्धाः सुकविना मिश्रेण। कविः उदात्तभारतस्य पुराणोदितच्छविं द्रष्टुकामः, यथा—

**हे प्रभो! संविधेयं पुनस्तादृशं**

**यत्र वेदध्वनिर्दिव्यपूजा भवेत्।**

**निर्भयाः सुप्रसन्ना भवेयुः स्त्रियो**
**वैभवेनोन्नतं सुन्दरं भारतम्।।**

काव्येऽस्मिन् प्रतिपदं प्रतिपद्यं च रम्यरम्या पदावली, पदविन्यासचातुरी, अलङ्कारादिसद्गुम्फश्च द्रष्टुं शक्यन्ते। एतत्प्रणीतकाव्यप्रभावः समस्तजनमानसे भवतात् काव्यं च सूरिसंसदि भूरि प्रतिष्ठां लभतामिति कामयमानः कविं च राजकुमारमिश्रम् आशीर्वचोभिः संयोजयन् विरमामि।

किञ्च —

**राजा सुशासनाधानात् प्रकृते रञ्जनात्तथा।**
**सुकुमारकुमारेण कृतमेतत् प्रकाशताम्।।**

रमेशकुमार पाण्डेयः

**प्रो० रमेशकुमारपाण्डेयः**
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्,
नवदेहली.

# किञ्चिद् वाचिकम्

आधुनिकसंस्कृतकविता बहुविधैर्युगीनैः संवेदनैः समन्विता, विविधरसनिषेकैस्तरलिता सती सहृदय-जागरूकहृदयानि मोदयन्ती चकास्ति। नात्र कश्चिदपि सन्देहलेशो यत् साम्प्रतिकं युगं संस्कृतकवितायाः स्वर्णयुगम्। यावन्ति काव्यानि विलिख्यन्तेऽधुना संस्कृतवाङ्मये न तावन्ति काव्यानि अन्यासु देशस्य भाषासु। अतः संस्कृतं महीयते एतस्यामेव दशोत्तरद्विसहस्रतमायां शताब्द्यामिति निर्भ्रान्तमुद्घोष्यते।।

अस्मदनुजः डॉ० राजकुमारमिश्रः आधुनिक-संस्कृतयुगस्यैव कश्चन सम्भावनाशीलो युवकविर्यस्य काव्यं "**भारतभूषणम्**" सम्प्रति प्राकाश्यमुपयाति। कवेर्दुग्धधवला लोकस्पन्दनाभिव्यक्तिरत्र प्रतिपदं नरीनृत्यते।

एतस्मिन् काव्ये दशशीर्षकेषु संस्कृत-संस्कृति-देशराजनीति-आतङ्कवाद-पर्यावरण-गङ्गा-धेनु-उत्सवोल्लास-शान्तिविषयका भावाः क्रमशः उद्भाविताः कविना रसनिर्भरे पथि इति हृदयेनानुभूयते। भारतवर्षे जनिं लब्ध्वापि मे निरुद्देश्यं व्यर्थं वा यापयन्ति जीवन क्षणान्, तान् वीक्ष्य कवेः कश्चन संरम्भस्तस्याधोलिखिते पद्ये द्रष्टुं शक्यते। यथा—

**भारते जन्म पुण्ये कृते प्राप्यते**
**तत्कथं याप्यते व्यर्थवज्जीवनम्।**
**अन्तकाले यथा रामनामस्मृति-**
**स्साधु विज्ञाय सत्याद् विरक्तिः कथम्।।**

स्वकीयां संस्कृतिं प्रति कवेर्हृदये जागर्ति कीदृग्विधं गौरवमेतत् प्रमाणितं भवति प्रस्तुते श्लोके यत्र भारतीय-संस्कृतिर्मणिस्तथा च वैदेशिकी संस्कृतिः काचोच्चय इति व्याख्यातः। यथा—

**संस्कृतिं स्वां परित्यज्य ये मन्वते**
**सभ्यतां शोभनां हन्त वैदेशिकीम्।**
**नो समत्वं द्वयोर्जायते जातुचित्**
**क्वाथ रत्नोच्चयः कुत्र काचोच्चयः।।**

एतस्य कवेः पीडा क्वचिदित्थं वर्तते यत् परस्परं युद्धं कुर्वन्तो भारतभ्रातरः शक्तिहीना भविष्यन्ति वैदेशिका आक्रमणं करिष्यन्ति हन्त! यथा—

**भ्रातरोऽप्यद्य संयुध्यमाना मिथः**
**तेन राष्ट्रं ध्रुवं दुर्बलं जायते।**
**शक्तिहीनत्वमालोच्य वैदेशिका**
**देशमाक्रन्तुकामा भवन्त्युद्यताः।।**

कवेरिच्छा राष्ट्रभक्तान् प्रति सौजन्यगर्भा परस्परं प्रेमभरालसा अभिभासते। काव्यस्यैतस्य प्रायः सर्वेष्वपि शीर्षकेषु लोककल्याणकारिणी लोकोद्बोधनक्षमा भावना साक्षात्क्रियते या कवेर्व्यक्तित्वस्य असाधारणी धर्मलेखा।

ऋग्वेदकालादद्यावधि या पर्यावरणसंरक्षणस्य भावनायात्रा संस्कृतसाहित्ये प्रचलति तस्याः प्रतीतिः भारतभूषणाख्ये काव्येऽस्मिन् भवति। स्पष्टतया पर्यावरण-सुरक्षा भावना जागरिता कविना निम्नाङ्कित श्लोके यथा—

**देवरूपस्तथा जीवनाधायकः**

**स्वास्थ्यसम्पोषकः पादपानां गणः।**

**स्वार्थतश्छिद्यते भिद्यते भूरिशः**

**सर्वयत्नेन संरक्षणीयः समैः।।**

ईदृग्विधमादर्शलोकजीवनमभिवाञ्छन् कविः काव्येऽस्मिन् प्रभुं प्रार्थयते पुनस्तादृग्विधं वेदोद्घोषमयं भारतं भावयितुं सोत्कण्ठम्। यथा—

**हे प्रभो! संविधेयं पुनस्तादृशं**

**यत्र वेदध्वनिर्विप्रपूजा भवेत्।**

**निर्भयाः सुप्रसन्ना भवेयुः स्त्रियो**

**वैभवेनोन्नतं सुन्दरं भारतम्।।**

वस्तुतो ग्रन्थेऽस्मिन् उत्थापिताः सन्दर्भाः कवेजागरूकतायाः प्रमाणं प्रस्तुवन्ति। असौ जागरूकस्तरुणकविरनेनैव प्रकारेण सर्वमङ्गलां कवितां रचयन् वर्धतां यशःशरीरेण प्रकाशतां सर्वदैवेति शुभाशंसनं परिकल्प्यते। कवे राजकुमारस्येदं काव्यं तस्य आगामिकाव्यानां सुदृढां पृष्ठभूमिं निर्मापयतु इति सत्कामनया कविमिममभिनन्द्य सस्नेहं विरमामीति शम्।

**डॉ० जनार्दनप्रसादपाण्डेयः 'मणिः'**

**राष्ट्रियसंस्कृतसंस्थानम्, इलाहाबाद**

# आत्मवाचिकम्

भगवतो विश्वनाथस्याऽकम्पयाऽनुकम्पया भगवत्याः श्वेताम्बरायाश्शारदाया वात्सल्यकृपया च जायतेऽद्य रचनायात्राया मे प्रथमः पादनिक्षेपः। मन्ये एतत्तथैव यथा लोके प्राप्तजनिः शिशुः मातृसेवया तत्कृपया च स्वकीयम् आदिमं पादं प्रसार्य स्वजीवनयात्रामारभते। यद्यपि तदीयजीवनयात्रा मातृगर्भकालादेव जायते किन्तु जनाः प्रायेण चलन्तमेव बालं वीक्ष्य-'इदानीम् अयं स्वजीवन-यात्रामारभते' इति कथयन्ति, तथैव कवीनां कृतेऽपि, यतोहि कवावपि तज्जन्मकालादेव कवित्वं भवति कालेन च प्रस्फुटीभवति रचनात्मिकया क्रियया च लोकाय प्रकाशते। वस्तुतो नाऽहं कविः यतोहि कविधर्मस्तु स्वाभाविको जन्मान्तरसंस्कारवैभवोत्थोऽप्रयासजश्च भवति कथितं प्रथितं च—

**"काव्यन्तु जातु जायेत कस्यचित्प्रतिभावतः!"**

किन्तु कवित्वं क्वचिद् व्युत्पत्तिकाव्याभ्यासाभ्यामपि उत्पद्यते। अतो मम कवित्वे कदाचित् सैव स्थितिः। यतोहि मया काव्यानुशीलनाभ्यासबलादेव किञ्चित् लिख्यते। मन्ये कवित्वं नाम संस्कृतकल्पतरुसेवाफलम्। यथा फलं वृक्षस्य उपरि अवतिष्ठते तत्प्राप्तिकामश्च जनः पूर्वं वृक्षमारोहति सावधानेन, पश्चाच्च प्राप्नोति, तथैवाऽहमपि कवित्वफलप्राप्तिकामनया संस्कृतविशालकल्पतरुं पश्यन्

तन्निर्यदाभया च किञ्चिदपि अकुर्वाणः कथमपि आरोहणोपायं विचिन्तयामि। कवित्वफलप्राप्तये मया यो यो व्युत्पत्त्यभ्यासरूपः प्रयासः क्रियते तस्यच्छविः अस्यां रचनायां कदाचिद् द्रष्टुं शक्येत। इयं मम प्रथमा कृतिः। यस्याः प्रकाशने बहुविलम्बोऽभवत्। वस्तुतः काव्यस्यास्य प्रणयनारम्भः पञ्चाधिकद्विसहस्रतमाब्दे (२००५) शिक्षाशास्त्रीत्युपाधिं प्राप्नुवता मया कृतः, यश्च षडधिकद्विसहस्रतमाब्दे (२००६) ख्रिष्टाब्दे पूर्णतामगात्। यस्य कस्यापि रचनाकारस्य कृते तद्रचनारम्भे भवति किमपि प्रेरणास्पदम् उत्तेजकं वा वस्तु, यत्प्रभावात् सः लिखति। अतः तदुल्लेख आवश्यकः प्रतिभातिराष्ट्रियसंस्कृतसंस्थानस्य लखनऊपरिसरतः शिक्षाशास्त्र्यु-पाधिग्रहणावसरे तत्रस्थपुस्तकालयदिदृक्षा मम मानसे उदपद्यत, तत्र च त्रिवेणीकवीनाम् **'अभिराजराजेन्द्रमिश्र'** महोदयानाम् एकं **'संस्कृतशतकम्'** नाम पुस्तकं मम दृष्टिपथे आगतम्। काव्यमिदमभिराजराजेन्द्रमिश्रवर्याणाम्! इति दृष्ट्वा बहुप्रसन्नोऽभवम्। यतोहि मम सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य आचार्यकक्षायामध्ययनं यावद् आसन् ते तत्रत्या लोकप्रियाः कुलपतयः। तेषां च वैदुष्यं वाराणस्यां सुप्रथितम्। तद्वैदुष्यकथा सर्वत्र इतस्ततो भवति स्म तदानीन्तना वर्णनीयविषया। येषु कथमयं गायति! कथं वा भाषते! कथं वा रचयति! कथं वा लिखति! कथं वा साधुशब्दनिगुम्फनं करोति! एतन्मुखव्याजेन साक्षात् शारदा वसतीव! इत्यादिकं [illegible] स्म। सौभाग्याद् [illegible]

कदाचिद् एकस्यां गोष्ठ्यां तान् अधिमञ्चं प्रथमतया भाषमाणान् श्रुतवान्, तदारभ्य तद्वैदुष्यप्रशंसकोऽभवम्। यद्यपि तैः साकं साक्षात् परिचयस्य अवसरो न लब्धो मया। आवयोः साक्षात् परिचयो नवाधिकद्विसहस्रतमे (२००९) क्रिस्ते कस्मिँश्चिद् विशिष्टेऽवसरेऽकस्मादभवत्। एतदेवासीद् रहस्यं, तत्पुस्तकप्राप्त्यवसरे मे प्रसन्नतायाः। यतोहि यः कमपि ईहते स तस्य किमपि द्रव्यं विलोक्य हर्षनिर्भरमानसो भवत्येव एष तु लोकस्वभावः —

**न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।**
**स तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः।।**

अस्तु तत्काव्यपठनाद् मम मानसे कश्चन सङ्कल्पः उदपद्यत, यदहमपि एतादृशं संस्कृतपक्षोपस्थापकं किमपि काव्यं रचयेयम्। तदारभ्य अनुदिनं तत्रैव वसन् काव्यप्रणयनम् आरब्धवान्। अस्यां रचनायां कतिपयस्थलेऽभिराजराजेन्द्रमिश्रवर्याणां पद्यगतभावच्छाया कदाचित् छन्दोऽन्तरेण द्रष्टुं शक्येत, मन्ये तत्र तत्काव्यपठन-समनन्तरमेवास्य काव्यस्य रचनारम्भतैव कारणम्। पुनश्च पाठकः यं सर्वाधिकमधीते तदुपरि तस्य प्रभावस्तु दुर्वार एव। पूर्वं मयाऽपि विरच्यमाणस्य काव्यस्य संस्कृतशतकमेव नामकरणं विचारितमासीत्, किन्तु यथा यथा रचनायां वर्णनवस्तुवैविध्यनिवेशः समजनि तदा तदा नामकरणे परिवर्तनमपि अभवत्। अस्तु अन्ते "**भारतभूषणम्**" इति नामकरणे दृढमानसोऽभवम्। यतोहि भारतस्य भूषणं न केवलं संस्कृतमेव प्रत्युत यत्र तत्र वर्तमानानि मन्दिराणि,

भवनानि, नगराणि विविधाश्च सम्प्रदायाः प्रथन्तेतराम्। संस्कृतस्य वाग्भूषणाधारत्वे भर्तृहरिः स्वयमेव ब्रूते—

**वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते**
**क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम्।**

अतः संस्कृतमस्ति भारतभूषणस्य प्रमुखतमम् अङ्गं भूषणञ्च। एत एव मया स्वभारतभूषणाभिधे काव्ये सर्वप्रथमं भारतप्रशंसां विधाय संस्कृतमहत्त्वम् अगीयत।

इदं काव्यं भावकाव्यश्रेण्याम् अवतिष्ठते यतोहि अत्र कवे राष्ट्रविषयिणी भक्तिः, राष्ट्रहितवर्धनपरवस्तुविषयिणी च रतिः महीयते, अतः '**रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः, भावः प्रोक्तः**' इति सिद्धान्ताद् भावकाव्यता सिध्यति काव्यस्यास्य।

एतस्य काव्यस्य विविधानि पद्यानि विविधासु 'सम्भाषणसन्देश' -'भारतमुद्रा'- 'भारतोदय'- 'गाण्डीवा'-दिसंस्कृतपत्रिकासु यथाकालं प्रकाशितानि। इदानीं समग्ररूपेण एतस्य प्रकाशनं जायते। त्रुटिनिरपेक्षा विद्वद्वरा इदं काव्यं पठित्वा मां निजप्रेमभाजनं च मत्वा कृतार्थयिष्यन्तीति प्रार्थये। अन्ते केवलमेतदेवाभिधाय विरम्यते—

**पुराणमित्येव न साधु सर्वं न चापि किंचिन्नवमित्यवद्यम्।**
**सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः।।**

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।।**

# कृतज्ञताऽऽलोकः

भारतभूषणाख्यकाव्यस्याऽस्य प्रकाशने सम्प्रेरकाणां तथा च सदैव मल्लेखनकार्यें उत्साहप्रदायकानां स्वासाधारणरचनाधर्मितया शारदासेवया च निखिलेऽपि राष्ट्रे विख्यातानां नैकपुरस्कारपुरस्कृतानां राष्ट्रपतिसम्मान-सभाजितानाम् अस्मद्गुरुकल्पानाम् आदर्शभूतानां मद्धितचिन्तकानां कुलपतिचराणां **'प्रो० अभिराज-राजेन्द्रमिश्र'** महोदयानां कृतज्ञतां विनिवेदयामि यतोहि तेषामहं न केवलं काव्यरचनयैव प्रभावितः प्रत्युत अद्भुतव्यक्तित्वतोऽपि। ते मद्भारतभूषणकाव्याय त्वरितमेव निजां सम्मतिम् आशीर्वचांसि च प्रदायोपकृतवन्तः। अतो मया भूयोभूयः प्रणम्यन्ते।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य साहित्यविभागा-ध्यक्षचराणां साहित्यशास्त्रमर्मज्ञानाम् अस्मद्गुरुचरणानां शिष्योपकारनिरतानां विविधविद्याविद्योतितान्तःकरणानां महाकवींनां धवलवर्णानां भव्यातिभव्यवस्त्रधारकाणां काशीपरम्परारक्षणैकनिपुणानां समवाप्तराष्ट्रपतिसम्मानानाम् एतत्काव्यसंशोधकानां **'प्रो० शिवजी उपाध्याय'** वर्याणां कार्तज्ञ्यं बिभर्मि येषां सदैव ममोपरि वात्सल्यदृष्टिः प्रसरति ते स्वस्वास्थ्यकारणाद् निजां वाचिकीं सद्भावनाम् आशीर्वचांसि च सम्प्रेष्य मामनुगृहीतवन्तः अतो विनयाञ्जलिपूर्वकं पोपूज्यन्ते।

राष्ट्रकविपरम्परोद्वहनप्रथिताभिधानानां स्रिग्विणीवृत्त-प्रयोगनिजाशयव्यक्तीकरणसमर्थानां श्रीमताम् **आचार्य-'रमाकान्तशुक्ल'** महोदयानां कृतज्ञताम् आवेद्मि ये च निजम् आशीर्वादम् एतद्रचनां प्रति दत्तवन्तः।

पुनश्च सद्भावस्नेहमूर्तीनां मदुत्साहसंवर्धकानां साहित्यशास्त्रविचक्षणानां **'प्रो० रमेशकुमारपाण्डेय'**-वर्याणां (श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्थानां) शोधप्रकाशननिदेशकानां कृतज्ञतां ज्ञापयामि ये च मां स्वकृपाधारया सदैवाभिषिञ्चन्ति।

विविधजटिलग्रन्थोद्धारतत्पराणां टीकाकर्मसाधन-सिद्धहस्तानां नित्योत्साहपरम्पराणां सुरभारतीसमुपासकानां मदग्रजकल्पानां राष्ट्रियसंस्कृतसंस्थानस्य मुक्तस्वाध्यायपीठस्य निदेशकमहोदयानां श्रीमतां **'डॉ० रमाकान्तपाण्डेय'**-महाभागानां कृतवेदितां ज्ञपयामि ये च सदैव मत्पथप्रदर्शका भवन्ति।

राष्ट्रपतिसम्मानसम्मानितानां भ्रातृकल्पानां मधुर-कण्ठकवीनां **'डॉ० जनार्दनप्रसादपाण्डेय' 'मणि'**-महाभागानां कृतवेदितां प्रकटयामि ये च काव्यस्यास्य प्रकाशने समीक्षापरं पत्रं सम्प्रेष्योपकृतवन्तः।

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य अस्मन्मित्रवर्याणां श्रीमतां **'डॉ० भागीरथिनन्द'** महाभागानां कृतज्ञताम् अभिमन्ये, यतोहि ते अल्पकालेनैव काव्यस्यास्य समीक्षां विधाय जनमिमं स्वीयीकृतवन्तः।

पुनश्च राष्ट्रियसंस्कृतसंस्थानस्य सहायकाचार्याणां मित्रमणीनां श्रीमतां **'डॉ० राधावल्लभशर्म'** महोदयानामपि कृतज्ञतां विजाने काव्यस्यास्य समीक्षणाय। पुनश्चाहं मदभिन्नमित्राणां सदोत्साहप्रभातिजटिलकार्यसाधनपराणां निरन्तरं स्वाध्यायनिरतानां **'डॉ० पंकजव्यास'** महोदयानां कृतवेदितां प्रकटयामि आशिषा च संयोजयामि, सर्वतोभावेन ममोत्साहवर्धनाय।

पुनश्च पित्रोः **'आशामिश्र-रामसागरमिश्रयोः'** कृतज्ञतां नतेन मूर्ध्ना ज्ञपयामि, तयोः कृपाप्रसादतः एव सर्वमेतत् भवत्पुरस्तात् सम्पद्यते। पुनश्च सहधर्मिण्याः **'प्रीतिमिश्रायाः'** यदि नामोल्लेखो नाभविष्यत् तर्हि काव्यमेतत् सर्वथा पूर्तिं नागमिष्यत्। सा स्वयमेव सर्वं गृहजातं साधयन्ती मां च लेखनादिक्रियायां संयोजयन्ती सहयोगं दत्तवती, अतः तदर्थमपि कृतवेदिताम् अभिव्यनज्मि तथा च पुत्र्याः**'श्रेयामिश्रायाः'** पुत्रस्य **'आर्यमिश्रस्य'** च कृतेऽपि मङ्गलां वाचं व्याहरामि आशिषा च संयोजयामि, मत्कार्यसाधनाय।

अन्ते च **'श्रीकृष्ण-साहित्य-सदन'** प्रकाशन-प्रतिष्ठानस्य प्रकाशकवर्याणां श्रीमतां **'शैलेन्द्र'** महोदयाना-मपि कृतज्ञतां बिभर्मि अचिरमेव काव्यस्यास्य प्रकाशनाय।

श्रीविश्वनाथो विजयते

उत्तरप्रदेशीयवाराणसीजनपदान्तर्गतकठिराँवसंवसथस्थेन
श्रीरामसागरमिश्रसूनुना
राजकुमारमिश्रेणाऽभिनवं प्रणीतम्

# भारतभूषणम्

## (संस्कृतगीतकाव्यम्)

### मङ्गलाचरणम्

वाग्देवीं कुलदेवतां गुरुवरान् सर्वाश्च विद्याप्रदान्
नित्यं मङ्गलदायकं गणपतिं भक्त्या प्रणम्यादरात्।
काव्यं भारतभूषणं सुललितं लोके विदां प्रीतये
वक्ष्येऽहं रचितं नवं रुचिकरं तद्गौरवप्राप्तये।।
यया शक्त्या लोके प्रवहति कवीनामिह मुखा-
दजस्रं काव्यांनाममरतटिनीवाद्भुतघटा।
यया वा निर्ध्वान्ताः सकलमनुजाः सैव निखिलान्
विकारान् सम्मार्ज्य प्रथयतु सुखोद्रेकमचिरम्।।

### कविविनयः

नौचित्यं न पटीयसी नवनवा रीतिर्नवाऽलङ्कृति-
र्नैवास्ते कविकारणं समुचितं व्यङ्ग्यादिशून्यं तथा।

**हेयं काव्यमपि प्रसन्नमनसा येऽधीयते धीधनाः**
**हेतुस्तत्र निरर्गलप्रणयिनी भक्तिर्हि राष्ट्राश्रिता।।**

**यत्र सत्यं शिवं सुन्दरं राजते**
**यत्र धर्मो नरीनृत्यते प्रत्यहम्।**
**यत्र रम्या कथा दिव्यरामायणी**
**संस्कृताप्लावितं भारतं तद् भजे।।१।।**

जहाँ 'सत्यं' 'शिवं' 'सुन्दरं' विद्यमान हैं जहाँ धर्म प्रतिदिन नर्तन करता रहता है, जहाँ नित्य दिव्य रामायण की कथा सुनने को मिलती है ऐसे संस्कृत से आप्लावित भारत की मैं वन्दना करता हूँ।

**वीरपूजा सदा काव्यधारा तथा**
**सैनिकास्तत्परा देशसंरक्षणे।**
**मातृभूमिं नमत्सज्जनानां गणः**
**तन्नुमो भारतं धीरवीरान्वितम्।।२।।**

जहाँ वीरों की पूजा होती है और काव्य की धारा अविरल बहती है, सैनिक देश की रक्षा करने में सदैव तत्पर रहते हैं, तथा अपनी मातृ-भूमि का नमन करते हुए सज्जन पुरुषों का समूह सदा दिखाई देता है ऐसे धीर तथा वीर पुरुषों से युक्त भारत को मैं प्रणाम करता हूँ।

नित्यपीयूषपानप्रियास्तेऽमरा
आमनन्तीव नाकस्य निस्सारताम्।
सत्कथायाः सुधायाः कृते मेदिनी-
माश्रयन्ते सदा भारताख्यामहो।।३।।

नित्य अमृत का पान करने वाले वे देवता भी मानो अपने स्वर्ग-लोक के अपरिमित सौख्य को भी तुच्छ मानते हैं, और वे बार-बार सत्कथा की सुधा का पान करने हेतु भारत नाम वाली धरा का आश्रयण करते हैं!!

यत्र काशी पवित्रा प्रिया राजते
मन्दिराणां चयः सर्वतः शोभते।
आगरानागरं ताजहर्म्यं महद्
दिव्यकाश्मीरभूः स्वर्गभूषायते।।४।।

जहाँ अत्यन्त प्रिय तथा पवित्र काशी नगरी सुशोभित हो रही है तथा सर्वत्र भव्य मन्दिरों का कतार दिखाई देता है, जहाँ आगरा में स्थित 'ताजमहल' तथा कश्मीर की मनोल्लासिनी छटा विद्यमान है ऐसी वह भारत नाम वाली देवभूमि मानो स्वर्ग की तरह आचरण करती हुई दिखाई दे रही है।

वेदशास्त्रादिकं ज्ञानमूलं मतं
छन्दसामुच्चयः पद्यधाराश्रयः।
रम्यरम्या कवीनां सुकाव्यच्छटा
राजते भारते भावनोद्यद्-घटा।।५।।

जहाँ ज्ञान के मूल वेद, शास्त्र, पुराणादि माने गए हैं, विविध छन्दों का समूह पद्य की धारा का आश्रयभूत है, कवियों के रम्य से रम्य सत्काव्यों की छटा विद्यमान है, सद्भावना से जोड़ने वाली समस्त वस्तुएँ भारत में सुशोभित हो रही हैं।

**ज्ञानदानप्रकाशेन विश्वम्भरं**
**विश्वबन्धुत्वसद्भावनाभावितम्।**
**सच्चिदानन्दसन्दोहसम्भूषितं**
**भारतं भूतले भूयसा भासताम्।।६।।**

ज्ञान के वितरण प्रथा से विश्व का भरण करने वाला, विश्व बन्धुता की भावना से ओतप्रोत, सत् चित् आनन्द के सन्दोह से विभूषित यह भारत नामक भव्य राष्ट्र इस भूतल पर अपने तेज से प्रकाशित होता रहे।

**यत्र शास्त्रप्रसारस्तथा चिन्तनं**
**यत्र रामस्य सद्वृत्तमाचर्यते।**
**यत्र यज्ञाहुतिः सुस्वरैर्दीयते**
**देववागुन्नतं भारतं तद्भजे।।७।।**

जहाँ सर्वत्र शास्त्र चर्चा की जाती है तथा चिन्तन किया जाता है, जहाँ मर्यादा पुरुषोत्तम श्रीराम के सद्वृत्त का आचरण किया जाता है, जहाँ पर वैदिक-याज्ञिक के द्वारा स्वर विधि से यज्ञ में आहुति प्रदान की जाती है ऐसे देववाणी संस्कृत से उन्नत भारत की मैं वन्दना करता हूँ।

हिन्दवो मुस्लिमाः सिक्खबौद्धादयो
यत्र देशे वसन्ति प्रसन्ना मिथः।
व्याहरन्तो निजोपास्यदेवं ध्रुवं
निर्भया लोकयात्राप्रसारोद्यताः।।८।।

जिस देश में हिन्दु, मुस्लिम, सिक्ख, बौद्ध आदि लोग अत्यन्त प्रसन्नता पूर्वक अपने-अपने आराध्य देव की उपासना करते हुए नित्य निर्भय होकर अपनी लोकयात्रा को प्रसारित करते हैं।

यत्र काव्याऽमृतं स्यन्दते सर्वतः
स्वर्गलोकस्य सौख्यं समुद्भासते।
तत्र सम्प्राप्य जन्म प्रकृष्टोन्नतं
नाप्नुते देवभावं जनः किं शिवैः?।।९।।

जहाँ चारों ओर काव्य सुधा बहती रहती है तथा जहाँ स्वर्ग लोक का सौख्य प्राप्त होता रहता है, वहाँ (असकृत् पुण्यों से) उत्तम तथा मूल्यवान् जन्म प्राप्त कर प्राणी अपने सद्धर्माचरण से देवत्त्व की प्राप्ति क्या नहीं कर लेता?

यत्र गङ्गा सुधास्यन्दिनी विश्रुता
दिव्यगोदावरी नर्मदा शर्मदा।
आदिरामायणं तन्महाभारतं
तद् बृहद् भारतं स्वर्गसौख्यास्पदम्।।१०।।

जिस देश में सुधा को प्रवाहित करने वाली लोक-प्रसिद्ध सुरधुनी गंगा, दिव्यगोदावरी तथा कल्याणकारिणी नर्मदा विद्यमान हैं, जहाँ आदिकाव्य रामायण और महाभारत शोभा को प्राप्त करते हैं ऐसा विशाल भारत देश स्वर्ग के समान सुख को प्रदान करने वाला है।

**यत्र संघोष्यते वेदवाक्यं बुधैः**
**सेव्यते सङ्गतिः सज्जनानां तथा।**
**शास्त्रचर्चासदाचारसञ्चारतः**
**संस्कृता भारती तत्र विद्योतते।।११।।**

जिस भूतल पर वैदिकों के द्वारा वेद वाक्यों का नित्य उच्चारण किया जाता है तथा सज्जनों के सङ्गम का लाभ उठाया जाता है उस भूतल पर शास्त्र की चर्चा एवं सदाचरण का पालन करने से संस्कृतभारती प्रभासित हो रही है।

**भारतीयैकतासाधकं संस्कृतं**
**विश्वबन्धुत्वसद्भावदं संस्कृतम्।**
**ज्ञानसन्दोहसञ्चारकं संस्कृतं**
**सौभगं सौहृदं सुन्दरं संस्कृतम्।।१२।।**

यह देववाणी संस्कृत भारतीय-एकता की साधक, विश्व-बन्धुत्व के सद्भाव को देने वाली, ज्ञान-समूह का संचार करने वाली, ऐश्वर्यसम्पन्न, मैत्री भाव की प्रकाशिका तथा अत्यन्त सुन्दरता से सम्पन्न है।

सद्गुणोत्त्थानसन्मार्गदं संस्कृतं
दिव्यविद्याप्रदं प्राञ्जलं संस्कृतम्।
नीतिवाक्येन सम्पोषितं संस्कृतं
तद्धि सत्यं शिवं सुन्दरं संस्कृतम्।।१३।।

यह देववाणी संस्कृत सद्गुणों से सम्पन्न, सन्मार्ग प्रदायिका, लोकोपयोगी दिव्यज्ञान तथा श्रेयस्करी विद्या को देने वाली, प्राञ्जलता से परिपूर्ण, नीतिप्रद वचनों से मण्डित, 'सत्यं शिवं सुन्दरं' की अनुपम भावना का प्रसारण करने वाली है।

साधनाध्यानसंयोजकं संस्कृतं
स्नेहसौहार्दविस्तारकं संस्कृतम्।
सर्वदोषापहं मञ्जुलं संस्कृतं
सेव्यते तत्त्वविद्भिः सदा संस्कृतम्।।१४।।

यह संस्कृतभाषा मानवों को देवत्व की साधना से जोड़ने वाली, स्नेह और सौहार्द का विस्तार करने वाली, समस्त दोषों को दूर करने वाली तथा ऋषि-मुनियों के द्वारा पूजित है।

लोकसद्बुद्धिविस्तारकं संस्कृतं
सर्वविद्याप्रदं सुन्दरं संस्कृतम्।
लोकनिस्सारताबोधकं संस्कृतं
बान्धवेष्वेकताकारकं संस्कृतम्।।१५।।

यह सुरवाणी संस्कृत समस्त मानवों की सद्बुद्धि का विस्तार करने वाली, अखिल विद्या को प्रदान करने वाली, संसार की नश्वरता (असारता, अनित्यता) को बताने वाली तथा बान्धवों में एकता - और अखण्डता को देने वाली है।

**कीर्तिपुञ्जप्रतिष्ठापकं संस्कृतं**
**विश्वकल्याणनिष्ठाप्रदं संस्कृतम्।**
**भक्तिशक्तिप्रदानोद्यतं संस्कृतं**
**ज्ञानवैराग्यमोक्षप्रदं संस्कृतम्।।१६।।**

यह देववाणी संस्कृत लोगों को यश प्रदान करने वाली तथा समाज में प्रतिष्ठित करने वाली, विश्व के कल्याण में अभिरुचि जगाने वाली, देवभक्ति तथा आत्मशक्ति को प्रदान करने में हमेशा तत्पर रहने वाली, ज्ञान, वैराग्य तथा मोक्ष को प्रदान करने वाली है।

**ज्ञानभक्तिप्रदं सर्वदा संस्कृतं**
**सर्वकार्यार्थसम्पादकं संस्कृतम्।**
**हृत्तलोल्लाससञ्चारकं संस्कृतं**
**लोकसौजन्यदं शिक्ष्यतां संस्कृतम्।।१७।।**

सर्वदा ज्ञान-भक्ति को देने वाली, सभी कार्यों का सहजता से सम्पादन करने वाली, मन को प्रसन्न रखने वाली तथा लोगों में सौहार्द को बढ़ाने वाली संस्कृतभाषा की हमें शिक्षा लेनी चाहिए।

**शब्दलालित्यलीलावनं संस्कृतं**
**पूर्वजानां सृतेर्बोधकं संस्कृतम्।**
**सज्जनानां सदा पालकं संस्कृतं**
**सर्वदा सौख्यकल्याणदं संस्कृतम्।।१८।।**

यह देववाणी संस्कृत शब्द के लालित्य की लीला भूमि, पूर्वजों की समृद्ध परम्परा का बोध कराने वाली, सज्जनों का पालन करने वाली तथा सुख और कल्याण को देने वाली है।

**त्यागसन्तोषसेवाप्रदं संस्कृतं**
**साधुसंसेवितं तुष्टिदं संस्कृतम्।**
**धर्ममार्गस्य सम्बोधकं संस्कृतं**
**लोकसद्भावनाकारकं संस्कृतम्।।१९।।**

यह देववाणी संस्कृत त्याग-सन्तोष तथा सेवा को प्रदान करने वाली, सत्पुरुषों से बहुधा सेवित, मानस में सन्तुष्टि के भाव को देने वाली, धर्म-मार्ग पर चलने का बोध कराने वाली तथा लोक सद्भावना की कारक है।

**बुद्धितेजःप्रतिष्ठापकं संस्कृतं**
**सर्वदा सत्यसंस्थापकं संस्कृतम्।**
**नैकसम्भावनासादितं संस्कृतं**
**देववागुन्नतं पठ्यतां संस्कृतम्।।२०।।**

बुद्धि को तीक्ष्ण बनाने वाली, आत्मतेज की प्रतिष्ठा

करने वाली, सत्य की स्थापना करने वाली, अनेक प्रकार की सम्भावनाओं से भरी रहने वाली देववाणी संस्कृत की हमें शिक्षा लेनी चाहिए।

पाणिनेर्दिव्यवाग्भूषितं संस्कृतं
सद्गुणप्रेरणादायकं संस्कृतम्।
देशभक्तिप्रसारोन्मुखं संस्कृतं
कल्पवल्लीव सर्वप्रदं संस्कृतम्।।२१।।

यह देववाणी संस्कृत पाणिनि की दिव्य वाणी से विभूषित, सद्गुणों को प्राप्त करने की प्रेरणा देने वाली, देशभक्ति की भावना का सम्प्रसारण करने में नित्य उन्मुख रहने वाली और कल्पवल्ली की तरह सब कुछ प्रदान करने वाली है।

नित्यवाणीपरिष्कारकं संस्कृतं
चारुमाधुर्यदं निर्मलं संस्कृतम्।
जीवनोद्देश्यसम्बोधकं संस्कृतं
किं वदामीति किन्न प्रदं संस्कृतम्।।२२।।

दोषयुक्त वाणी को शुद्ध करने वाली, काव्य-चर्वणा की बेला में मधुरता देने वाली, दोषहीन, मानव जीवन के लक्ष्य को बताने वाली, और कहाँ तक इसका गुण-गान किया जाए यह सुरवाणी संस्कृत क्या-क्या प्रदान नहीं करती है!

**औषधस्थान् गुणान् मामकान् वीक्ष्य ते**
**कुर्वतेऽमुष्यदेशे निजे विक्रयम्।**
**रूसहालैण्डपोलैण्डदेशेष्वपि**
**साम्प्रतं संस्कृतं पाठ्यते भूरिशः।।२३।।**

संस्कृत में निहित दिव्य औषधियों का ज्ञानार्जन कर विदेशी लोग अपने-अपने देश में आरोग्य की कामना करने वाले अपने बन्धुजनों के सेवार्थ औषधियों का विक्रय, पूर्णतः भारतीय पद्धति से बनी हुई बताकर बड़े हर्ष से करते हैं। परन्तु खेद है!! हम भारतीय उन्हीं के द्वारा निर्मित औषधियों का क्रय, पाश्चात्य परम्परा से बनी हुई जानकर करते हुए अपना गौरव समझते है। इससे स्पष्ट प्रतीत होता है कि संस्कृत की महत्ता को देखकर रूस, हालैण्ड, पोलैण्डादि देशों में प्रभूत मात्रा में संस्कृताध्यापन करवाया जा रहा है (पर हम भारतीय उदासीन बैठे हैं!!)

**संस्कृतस्य प्रभां वीक्ष्य वैदेशिका**
**आश्रयन्तेऽथ देशे निजे संस्कृतम्।**
**ज्ञातवद्भिर्भवद्भिः ससम्माननं**
**संस्कृतं देशभाषापदं नीयताम्।।२४।।**

विदेशी लोग हमारी संस्कृत में निहित ज्ञान-विज्ञान को देखकर अपने-अपने देशों में, इस देववाणी संस्कृत का उत्त्थान कर रहे हैं। अतः हम भारतीयों को भी इस

देववाणी की उपेक्षा न करते हुए इसे राष्ट्र की भाषा का गौरव प्रदान करने हेतु उद्यम करना चाहिए।

**यत्र धर्मातिरेकेण देशेऽमले**
**लेशमात्रं न पापं पुराऽऽसीद् जने।**
**सर्वभूतैकतासम्प्रसारोऽभवत्।**
**तत्र सद्भावदं संस्कृतं रक्ष्यताम्।।२५।।**

जिस राष्ट्र में पहले धर्म का सर्वतोभावेन पालन होने के कारण पाप का लेश मात्र भी नहीं था, जहाँ मानवों में चारों ओर एकता की भावना ही जीने का आधार थी। ऐसे राष्ट्र में सद्भावना को देने वाली देववाणी संस्कृत की रक्षा हमें अवश्य करनी चाहिए।

**संस्कृतस्य स्वरूपं यदासीत् पुरा**
**तत्कथं खण्डतां याति नक्तन्दिवम्।**
**अद्य सन्दृश्यते मारणं लुण्ठनं**
**कन्यकाधर्षणं सद्वधूताडनम्।।२६।।**

पूर्व में संस्कृत की जो स्थिति थी, वह न जाने क्यों दिन-रात विलुप्त होती जा रही है!! आज (संस्कृताध्ययन में लोगों की रुचि न होने के कारण देश में **''वसुधैव कुटुम्बकम्''** इत्याकारकभावना की क्षति होने लगी है जिससे) सर्वत्र मारपीट, लुटपाट, कन्याओं के साथ शोषणादि दुर्व्यवहार, नवोढा का यौतुकादि कारण से प्रताड़न आदि अनेक दुष्प्रवृत्तियाँ देखी जा रही हैं।

**भारते जन्म पुण्ये कृते प्राप्यते**
**तत्कथं याप्यते व्यर्थवज्जीवनम्।**
**अन्तकाले यथा रामनामस्मृति-**
**स्साधु विज्ञाय सत्याद्विरक्तिः कथम् ?।।२७।।**

भारतवर्ष में जन्म पुण्य सञ्चय से ही प्राप्त होता है (यहाँ देवता भी जन्म लेने के लिए सदैव तत्पर रहते हैं) ऐसा जानकर भी आप अपना उपयोगी समय नष्ट क्यों रहे हैं? जीवन के अन्तिम क्षण में जिस तरह आत्ममुक्ति हेतु राम स्मृति ही कारण होती है, इस सत्य को हम जानते है, फिर भी संस्कृताध्ययन से हमारी विरक्ति क्योंकर है? (क्योंकि संस्कृत ''सा विद्या या विमुक्तये'' इस दिव्य भावना की पोषिका है)

**ज्यौतिषं कर्मकाण्डञ्च मन्त्रास्तथा**
**सन्ति सर्वे निबद्धाः सखे! संस्कृते।**
**वेदवेदाङ्गसाहित्यविद्यारसाः**
**पाणिनेर्ज्ञानराशिश्च षड्दर्शनम्।।२८।।**

बन्धुओं! ज्यौतिष, कर्मकाण्ड, वेद, वेदाङ्ग, साहित्यविद्या की रस-सम्पत्ति एवं महर्षि पाणिनि प्रोक्त व्याकरणशास्त्र और दर्शनशास्त्र ये सभी संस्कृत भाषा में ही निबद्ध हैं। (इस कारण संस्कृत अत्यन्त महनीय तथा उपादेय है)

संस्कृतस्य ध्रुवं सेवनं जायता-
मत्र धारा सुधायास्ततः पीयताम्।
ज्ञानसारस्ततः केवलं धीयतां
सुन्दरं संस्तुतं संस्कृतं गीयताम्।।२९।।

बन्धुओं! इस दिव्य देववाणी संस्कृत की सेवा हमें अवश्य करनी चाहिए और इसमें निहित ज्ञान-पीयूष का पान करना चाहिए। ज्ञान के तत्त्व को आत्मसात् करना चाहिए और सदैव मङ्गलदायक संस्कृत का गुणगान करना चाहिए।

कापि भाषा न दुर्बोधिका भूतले
कातराणां कृते सर्वभीत्यास्पदम्।
यत्र हर्षो भवेत्सा सुबोध्या मता
क्लिष्टता नैव सन्दृश्यते संस्कृते।।३०।।

बन्धुओं! इस भूतल पर कोई भी भाषा कठिन नहीं है पर कायरों (भाषाभीरुओं) के लिए तो सर्वत्र कठिनता ही कठिनता है!! जिस भाषा में हमारी रुचि सर्वाधिक होती है वह हमें सुगम प्रतीत होती है। (इस कारण) देववाणी में क्लिष्टता नहीं दिखाई देती है?

चीनदेशीयभाषा स्वराघातिका
यास्ति चित्रात्मिका काकुभिः पीडिता।
सा हि भाषाथ क्लिष्टात्मिका मन्यते
किन्न ? सा भाष्यते तत्र सर्वैः जनैः।।३१।।

चीन देश की भाषा जो कि स्वराघातादि प्रयत्नों पर आधारित होने से तथा काकुओं के प्रभाव से अत्यन्त ही कठिन है। यदि हम उस चीनी भाषा को क्लिष्ट मानें - तो क्या वह वहाँ के लोगों के द्वारा सर्वाधिक नहीं बोली जाती?

**लब्धबोधः शुको रामनामोद्गिरन्**
**किं? मनुष्याः शुकेभ्योऽभवन्नक्षमाः।**
**सर्वलज्जां परित्यज्य लोकैः समै-**
**र्वागियं पारभाषा द्रुतं सेव्यताम्।।३२।।**

अभ्यास के कारण यदि शुक — सारिकादि पक्षी रामनाम के उच्चारण में समर्थ हो जाते हैं तो क्या मनुष्य उनसे भी अक्षम हैं (जो संस्कृत को कठिन मानकर पढ़ नहीं सकते?) अतः समस्त मनुष्यों को अपने भीतर छिपी हुई लज्जा सङ्कोचादि-भावनाओं को छोड़कर कल्याणकारिणी सुरवाणी का सेवन अवश्य ही करना चाहिए।

**संस्कृतेन प्रभातं च मध्येदिवं**
**संस्कृतेनाऽथ सन्ध्या भवेद् यामिनी।**
**संस्कृते जीवनं संस्कृते सद्गतिः**
**सर्वकालो व्यतीतो भवेत्संस्कृते।।३३।।**

मेरे दिन का आरम्भ संस्कृतभाषा के सेवन से हो, मध्याह्न संस्कृतमय हो तथा दिन का अवसान संस्कृत से

हो एवं मेरी रात भी संस्कृत से व्यतीत हो। मेरा जीवन तथा मरण संस्कृत सेवाचरण में हो, हे प्रभो! मेरी सम्पूर्ण जीवनवेला इस देववाणी की सेवा के लिए समर्पित रहे।

**काममाङ्ग्लादिभाषाविदो भूरिशः**
**सन्तु लोके न किन्त्वात्मबोधक्षमाः।**
**संस्कृतज्ञो महान् सत्यसंयोजनात्**
**तं प्रसूयाऽद्य माताऽऽप्नुते गौरवम्।।३४।।**

भले ही इस भुवन में आङ्ग्लादि कई विदेशी भाषाओं के ज्ञाता हो तथापि वे आत्मतत्त्व के ज्ञाता नहीं हो सकते। परन्तु देववाणी में निहित दिव्य ज्ञान को आत्मसात् कर लोक में प्रचार करने के कारण वह संस्कृतज्ञ ही महान् है उसे जन्म देने वाली जननी गौरव को प्राप्त करती है।

**वाङ्मयी संस्कृताख्या जनोल्लासिनी**
**वत्सला प्रेमरूपा नु वो वीक्षते।**
**विग्रहज्ञानविज्ञानसद्भास्वरं**
**संस्कृतं सेवितुं किं विलम्बायते?।।३५।।**

समस्त जनों को सदैव (अपने उच्चारण मात्र से) उल्लसित करने वाली संस्कृत वाङ्मय नाम वाली यह प्रेमरूप दिव्य देहवती भारती अपने भीतर वात्सल्य — ऊर्मि लिए हुए आप सभी को निरख रही है। तो फिर

समस्त ज्ञान-विज्ञान की आभा से परिमण्डित इस देववाणी संस्कृत की सेवा करने में हम विलम्ब क्यों कर रहे हैं?

**संस्कृतस्य प्रभावाद् द्रुतं भूतले**

**पूज्यते सेव्यते कोविदः सादरम्।**

**वर्तते संस्कृतेऽस्मिन् धनं माननं**

**वर्ततेऽस्मिन्यशस्तद्यशो गीयताम्।।३६।।**

संस्कृत के अध्ययन की महिमा से मनुष्य शीघ्र ही विद्वान् होकर इस पृथ्वीवलय पर लोगों के आदर का भाजन तथा सेवा का पात्र बन जाता है। इस संस्कृत में प्रभूत धन एवं मान तथा यश निहित हैं अतः हम सभी के द्वारा इस सुरवाणी संस्कृत की यशोगाथा का गान अवश्य ही किया जाना चाहिए।

**संस्कृतिप्राणदः कालिदासो महान्**

**व्यासभासौ च माघस्तथा भारविः।**

**यत्तपोभिश्चमच्चक्रिरे तच्चिरं**

**विश्वभालोल्लसत्संस्कृतं नृत्यताम्।।३७।।**

भारतीय संस्कृति को अपनी रचना के बूते प्राण देने वाले कविकुलगुरु 'कालिदास', 'व्यास', 'भास', 'माघ' तथा भारवि ने अपनी तपस्या से जिस सुरवाणी को चमत्कृत किया है ऐसी वह विश्व के मस्तक पटल पर आरूढ़ रहने वाली सुरवाक्, चिर काल तक नर्तन करती रहे।

**भाति गीताऽच्युतेनेष्टदा मोक्षदा**
**दिव्यविद्याप्रदा चान्धकारापहा।**
**दिव्यरामायणं भारतं भास्वरं**
**किं निबद्धं न बाभात्यहो संस्कृते।।३८।।**

भगवान् श्रीकृष्ण के मुखपद्म से निःसृत, मोक्ष देने वाली तथा अभीष्ट-सिद्धि को देने वाली, दिव्य विद्याओं की प्रदात्री एवं अन्धकार की हन्त्री (हरण करने वाली) गीता, इस संस्कृत में ही निबद्ध होकर शोभा को प्राप्त कर रही है। वाल्मीकि-रचित धन्य वह रामायण तथा व्यास-प्रणीत मनोहर वह महाभारत, क्या संस्कृत में निबद्ध होकर शोभा को प्राप्त नहीं हो रहे हैं?

**कः कविः किञ्च काव्यं च के बान्धवाः**
**का च माता पिता कश्च के भ्रातरः।**
**ज्ञानवाञ्छा भवेत्स्वान्तदेशे निजे**
**संस्कृतं निष्कलङ्कं तदा ज्ञायताम्।।३९।।**

बन्धुओं! यदि आप सभी के हृदय में यह जिज्ञासा उदित हो कि — कवि कौन होता है? तथा (कवि प्रणीत) काव्य का उपादेयत्व क्या है? हमारे बन्धु कौन हैं? हमारी माँ कौन है? पिता कौन है? तथा हमारे सहोदर कौन हैं? तो आप अपनी इस जिज्ञासा की पूर्ति हेतु इस निष्कलङ्कित (स्वच्छ) देववाणी संस्कृत का अध्ययन अवश्य करें।

हृत्तलोल्लासिनी सूर्यनित्यस्थिति-
व्योम्नि सन्दृश्यते येति सिद्धं वचः।
याति किन्तूदयं नूतनं यत् क्षितौ
निस्तपं शीतलं संस्कृतं सेव्यताम्।।४०।।

बन्धुओं! यह प्रसिद्ध कथन सिद्ध है कि भास्कर की हृदय को उल्लसित करने वाली स्थिति (उदय) नभोमण्डल में ही होती है पर यह संस्कृत रूपी नूतन सूर्य पृथ्वी वलय पर ही चमचमा रहा है! ऐसा देखकर प्रसन्नता पूर्वक (सौभाग्य वश पृथ्वी पर ही उदित) संस्कृत का आश्रयण अवश्य करें।

दुर्जनास्ते पृथिव्यां वृथा मन्वते
गोस्तनीं तां विना नास्ति माधुर्यकम्।
देववाक्-सेवनात्सत्सुधा स्यन्दते
कुत्र दिव्यो मणिः कुत्र काचोच्चयः।।४१।।

वसुधा — तल पर कुछ दुर्जन लोग (अपनी अज्ञानता के कारण) यह बेकार ही कहते हैं कि द्राक्षा — रस से बढ़कर मधुरता अन्यत्र नहीं प्राप्त होती! अरे देववाणी की समर्चना से तो साक्षात् अमृत बहने लगता है, अतः कहाँ वह (देववाणी रूप) दिव्य-मणि तथा कहाँ वह (द्राक्षा रस रूप, सहृदयों के लिए सर्वथा वैरस्य का कारण होने से अत्यन्त उपेक्षणीय) काँचों का ढेर!!

तच्च रक्तोत्पलं संस्कृतं दृश्यता-

मत्र पद्माकरे यत् प्रफुल्लं स्थितम्।

तत्परागोत्पतँल्लोलुपै रोदरैः

कोविदैः तद्रसः सत्वरं स्वाद्यताम्।।४२।।

पूर्ण रूप से खिले हुए रक्त कमल-संस्कृत को देखें जो कि इस भारत रूप रम्य सरोवर में विद्यमान है अत: उसके मकरन्द की लालच में उड़ते हुए भ्रमर — कोविदों के द्वारा शीघ्रता-पूर्वक उस दिव्य रस का आस्वादन किया जाना चाहिए।

वित्तदात्र्या तया विद्यया किं सखे!

या न मोक्षप्रदा नो यशोदाऽच्युता।

सर्वदाने समर्थं हि यद्राजते

संस्कृतं तत् समोदं समास्वाद्यताम्।।४३।।

बन्धुओं! केवल प्रभूत धन देने वाली उस विद्या से भला क्या प्रयोजन जो न यश देने वाली है, न ही अखण्ड धर्मा है तथा न लोगों को मोक्ष देने में ही समर्थ है, अत: सभी काम्य वस्तुओं को देने में एकमात्र समर्थ, जो यहाँ विराजित है ऐसी अपनी संस्कृत रूपी (दिव्यविद्या के) पराग की गन्ध का सेवन हम सभी के द्वारा आनन्द पूर्वक किया जाना चाहिए।

संस्कृतस्यैकमात्रेण पुत्रेण वै
निर्विशङ्कं सदा प्राप्यते दिग्जयः।
ख्यातिमान् मन्यतेऽसौ बुधैर्मण्डितो
दीयते विद्यया किन्न पाथेयकम्?।।४४।।

संस्कृत के एक मात्र पुत्र के द्वारा हमेशा बिना किसी सन्देह दिग्विजय प्राप्त किया जाता है, तथा वह विद्वानों से मण्डित एवं ख्यातिलब्ध माना जाता है, अतः देववाणी के द्वारा भला किस पाथेय को नहीं दिया जाता?

यादृशी छान्दसी माधुरी गाढता
राजते संस्कृते लोककल्याणदा।
नैव भाषान्तरे रम्यता चारुभा
दृश्यते श्रूयते गीयते वा पुनः।।४५।।

संस्कृत भाषा में लोक कल्याण को देने वाली जैसी गेयता, मधुरता और भाव की गहराई विद्यमान हैं वैसी चारुता एवं रम्यत्ता किसी दूसरी भाषा में न दिखाई देती है, न सुनी जाती है और न ही गायी जाती है।

देवचारित्र्यविस्तारिणी दुर्लभा
कल्पवल्लीनिभा प्रोज्ज्वला शाश्वतीः।
कामधेनुश्चतुष्पादयुक्-सारभू-
र्वागियं वेदवेदाङ्गसम्मिश्रिता।।४६।।

